पुत्र जन्मिउ । ते सर्वांगसुंदर, रूपिइं पुरंदर विवेकबंधुर राज्यधुरंधर सत्पुरुषसिंधुर नामि महीधर प्रवर्द्धमान हूउ । राजापृथ्वीचंद्रहइं राज्य करतां नवलाष नवाणवइ सहस्र नवसइं नवोत्तर वरस अतिक्रम्यां । तिसिइ अवसरि कानडदेसनउ राउ सिंहकेतु इसिइं नामिइं अकस्मात् पुहठाणपुरि पाटणिऊपरि चडी आविउ, लोकरहइं आतंक ऊपजाविउ । तत्काल चरपुरुषि पृथ्वीचंद्ररहइं जणाविउ । ते सांभली राजापृथ्वीचंद्र कोपि करी करवाल ऊलालतु सामहिउ, सुभटवर्ग गहगहिउ; भंभा वाजी, गगनांगण रहिउ गाजी । राजा आप जेतलइं हाथि चडिउ, तेतलइं मनि विमासण पडिउ । रे आत्मन् हुं बाह्यवइरी पूठिइं धाउं, अंतरंगवइरी पूठि न धाउं । कुण ए बुद्धि, किसी शुद्धि, जीतउ जोईयइ क्रोध, जेहतउ चालइ विरोध; जीतु जोईयइ मान, जेह—हुइं पर्वतनउं उपमान; जीती जोईयइ माया, जेहतु पामीयइ स्त्रीतणी काया; जीतु जोईयइ लोभ, जेहतु संसारि समयक्षोभ; जीतु जोईयइ काम, जेहतु फेडइं पुण्यतणउं ठाम । ईणिपरि नरेश्वरहुइं चींतवतां ऊपनउं शुक्लध्यान, तत्काल ऊपनउं केवलज्ञान । आव्या देव, करइं सेव; वइरी समिउ, आवी नमिउ; वाजइं वादित्र, महोत्सव विचित्र । देवे वेष दीधउ, राजऋषि लीधउ; हंसजमलि, वइठउ सुवर्णकमलि; दिइ उपदेश, हूउ पुण्यतणउ निवेश । एके आदरिउं सम्यक्त्व, एके श्रावकत्व; एके संयम, एके नियम । ईणिपरि लोकहुइं लाभ देई पृथ्वीमंडलि विहारक्रम करी पृथ्वीचंद्रि राजा सिद्धिसाम्राज्य लीधउं, तेहतणइ पुत्रि महीधरि पहुठाणपुरि अखंडप्रतापि राज्य कीधउं । पृथ्वीचंद्रनरेश्वरतणउं चरित्र सांभली, मनतणी रली, वली; वली, विवेकवंति पुण्यवंत लाभ लेवउ । जिसिइं पुण्यतणा प्रभावनउ सकल श्रीसंघहुइं श्रेयकल्याण ऋद्धिवृद्धिपरंपरा संपजइं ।

श्रीमदञ्चलगच्छे श्रीगुरुमाणिक्यसूरिणा ।
पृथ्वीचन्द्रनरेन्द्रस्य चरित्रं चारु निर्मितम् ॥

संवत् १४७८ वर्षे श्रावण सुदि ५ रवौ पृथ्वीचन्द्रचरित्रं पवित्रं पुरुषपत्तने निर्मितं समर्थितम्।

यावन्मेरुर्मही यावत् यावच्चन्द्रदिवाकरौ ।
वाच्यमानो जनैस्तावद्ग्रन्थोऽयं भुवि नन्दतात् ॥

इति श्रीअञ्चलगच्छे श्रीमाणिक्यसुन्दरसूरिकृते श्रीपृथ्वीचन्द्रचरित्रे वाग्विलासे पञ्चम उल्लासः ।




# खरतरपट्टावलीषट्पदानि

जिण दिट्ठइ आनंदु चडइ अइरहसु चउग्गुणु ।
जिण दिट्ठइ फडहडइ पाउ तणु निम्मलु हुइ पुणु ।
जिण दिट्ठइ सुहु होइ कट्ठु पुव्वुक्किउ नासइ ।
जिण दिट्ठइ हुइ रिद्धि दूरि दालिद्दु पणासइ ।
जिण दिट्ठइ हुइ धम्ममइ अबुहहु कांइ उइक्खहहु ।
पहु नवफणमंडिउ पासजिणु अजयमेरि कि न पिक्खहहु ॥ १ ॥
मयण म करि धरि धणुहु बाण पुणि पंचम पयडहि ।
रूविण पिम्मपयावि बंभहरिहरु मन विणडहि ।
रूउ पिम्मु ता बाण मयण तायरिसहि धणहरु ।
नवफणमंडिउसीस जाव न हु पिक्खिउ जिणवरु ।
जइ पडिहसि पासजिणिंदवसि नाणवंत णिम्मलरयण ।
तसु धणुहरु बाण न रूप नहि न भुयप्पिम्मु हुइ हइमयण ॥ २ ॥
नवफणिपासजिणिंदु गढिउ अन्नह्रि जु दिट्ठउ ।
अजयमेरि संभरिनरिंदु ता नियमनि तुट्ठउ ।
कंचणमउ अह कलसु सिहरि साणउ रज्ञावियउ ।
जणु सुतरणि तउ तवइ तिव्वु आयासिसउन्नउ ।
जा वुज्झुमिसिण ढक्कारविण कर उज्झिवि फरहरइ धर ।
जिणदत्तसूरि धर धवलि जसि ता पसिद्धि सुरभवणि कय ॥ ३ ॥
देवसूरिपहु नेमिचंदु बहुगुणिहि पसिद्धउ ।
उज्जोयणु तह वद्धमाणु खरतरवर लद्धउ ।
सुगुरु जिणेसरसूरि नियमि जिणचंदु सुसंजमि ।
अभयदेव सव्वंगु नाणि जिणवल्लह आगमि ।
जिणदत्तसूरि ठिउ पट्टि तहि जिण उजोइउ जिणचलणु ।
सावइहि परिक्खिवि परिवरिउ मुह्नि महग्घउ जिम रयणु ॥ ४ ॥
धणुहर धयवड धरिय सार सिंगार सुसज्जिय ।
सोहग्गिण गुडगुडिय पंच वर पडिम निमज्जिय ।
तियड अ तेअ अग्गलिय पिम्मपडिकारनिरुत्तिय ।
रइरणरहसुचलिय गरुयमाणिण मइ अन्निय ।
करि कडयड मुणिमहिवइहि रहिअ रूअ संपुन्नभय ।
जिणदत्तसूरिसीहह भयण मयणकरटिघड विहडि गय ॥ ५ ॥
तवनलफ्फभीसणह धम्मधीरिमसुविसालह ।

संजमसिरभासुरह दुसहवयदाढकरालह ।
नाणनयणदारुणह नियमनिसनहरसमिद्धह ।
कम्मकोवणिठ्ठुरह विमलपुच्छपसिद्धह ।
उपसमणउपरधरणुव्विसह गुणगुंजारवजीहह ।
जिणदत्तसूरि अणुसरह पय पावकरडिघडसीहह ॥ ६ ॥
जरजलवहलरउद लोहलहरिहिं गज्जंतउ ।
मोहमच्छउच्छलिउ कोवकल्लोल वहंतउ ।
मयमयरिहि परिवरिउ वंचवहुवेलदुसंचरु ।
गंथगरुयगंभीरु असुहआवत्तभयंकरु ।
संसारसमुद्दु जु एरिसउ जसु पुणु पिक्खिवि सुदरियइ ।
जिणदत्तसूरिउवएसु सुणि त परतरंडइ सुतरियइ ॥ ७ ॥
सावय किवि कोयलिय केवि खरहरिय पसिद्धिय ।
ठाइ ठाइ लक्खियहिं मूढ नियवित्तिविरुद्धिय ।
दरहिं न किंपि परत्त वेवि सुपरुप्पर जुज्झहिं ।
सुगुरु कुगुरु मणि मुणिवि न किंवि पहंतरु वुज्झहिं ।
जिणदत्तसूरि जिन नमहिं पयपउम सच्चु नियमणि वहहिं ।
संसारउयहिं दुत्तरि पडिय जि न हु तरंडइ चडि तरहिं ॥ ८ ॥
तवसंजमसयनियमि धम्मकम्मिण वावरियउ ।
लोहकोहमयमोह तह व सप्पिहिं परिहरियउ ।
विसमछंदलक्खणिण सत्थअत्थत्थविसालह ।
जिणवल्लहगुरुभत्तिवंतु पयडउ कलिकालह ।
अन्निहिवि गुणिहिं संपुन्नतणु दीणदुहियउद्धरणु धर ।
जिणदत्तसूरि पर पल्ह भणु तत्तवंत सलहियइ धर ॥ ९ ॥
वक्खाणियइ परमतत्तु जिण पाउ पणासइ ।
आराहियइ त वीरनाह कइपल्हु पयासइ ।
धम्मु त दयसंजुत्तु जेण वरगइ पाविज्जइ ।
चाउ त अणखंडियउ जु वंदिण सलहिज्जइ ।
जइ ठाइ त उत्तिमसुणिवरह पवरवसहिहो चउर नर ।
तिम सुगुरुसिरोमणि सूरिवर खरतरसिरिजिणदत्त वर ॥ १० ॥

इति श्रीपट्टावलीपद्यपद्यानि । संवत् ११७० वर्षे अश्वयुगायपक्षे ११ तिथौ श्रीमद्धारानगर्यां श्रीखरतरगच्छे विधिमार्गप्रकाशिवसतिवासिश्रीजिणदत्तसूरीणां शिष्येण जिनरक्षितसाधुना लिखितानि ।

## APPENDIX 1

# श्रीवस्तुपालतीर्थयात्रावर्णनम्

अयं क्षुब्धक्षीरार्णवनवसुधासन्निभचिता-
नुपाकर्ण्याकर्णानुपदमुपदेशानिति गुरोः ।
समस्तध्वस्तैना जनितजिनयात्रापरिकरो
ऽकरोत्सुस्थं प्रास्थानिकविधिमधीशो मतिमताम् ॥ १ ॥
श्लाघ्योऽतिसङ्घसहितः स हितः प्रजानां श्रीमानथ प्रथमतीर्थकृदेकचित्तः ।
सम्भाषणाद्भुतसुधाभवचाश्चचार वाचालवारिदपथो रथचक्रनादैः ॥ २ ॥
सान्द्रैरुपर्युपरिवाहपदाग्रजाग्रद्धूलीपटैर्झटिति कुट्टिमतामटद्भिः ।
मार्गे निरुद्धखरदीधितिधामसङ्घे सङ्घस्तदा भवनगर्भ इवावभासे ॥ ३ ॥
नाभेयप्रभुभक्तिभासुरमनाः कीर्त्तिप्रभाशुभ्रिमा-
काशः काशहृदाभिधेऽथ विदधे तीर्थे निवासानसौ ।
चक्रे चारुमना जिनार्चनविधिं तद्ब्रह्मचर्यव्रता-
रम्भस्तम्भितविष्टपत्रयजयश्रीधामकामस्मयः ॥ ४ ॥
पुष्टिभक्तिभरतुष्टया रयादम्बया हततमःकदम्बया ।
एत्य दृक्पथमथ प्रतिश्रुतं सन्निधिं समधिगम्य सोऽचलत् ॥ ५ ॥
ग्रामे ग्रामे पुरि पुरि पुरोर्त्तिभिर्मर्त्यमुख्यैः
पल्लसमावेशिकविधितता व्योम्नि पश्यन्पताकाः ।
मूर्त्ताः कीर्त्तीरयममनुत प्रौढनृत्तमपञ्च-
व्यापल्लीलाद्भुतभुजलतावर्णनीयाः स्वकीयाः ॥ ६ ॥
अध्यावास्य नमस्यकीर्त्तिविभवः श्रीसङ्घमंहस्तमः-
स्तोमादित्यमुपत्यकापरिसरे श्रीमल्लदेवानुजः ।
श्रीनाभेयजिनेशदर्शनसमुत्कण्ठोल्लसन्मानस-
स्त्रस्यन्मोहमथारुरोह विमलक्षोणीधरं धीरधीः ॥ ७ ॥
तत्र स्नानमहोत्सवव्यसनिनं मार्त्तण्डचण्डद्युति-
क्लान्तं सङ्घजनं निरीक्ष्य निखिलं मान्द्यीभवन्मानसः ।
सैषो माद्यदमन्दमेदुरतरश्लाघानिधिः शुद्धधीः
मन्त्रीन्द्रः स्वयमिन्द्रमण्डपमयं प्रारम्भयामासिवान् ॥ ८ ॥

मन्त्री मौलौ किल जिनपतेश्चित्रचारित्रपात्रं
स्नानं कृत्वा कलशलुठितैः स्मेरकाश्मीरनीरैः ।
चक्रे चञ्चन्मृगमदमयालेपनस्वर्णभूषा-
वर्ण्यैः पूजाकुसुमवसनैस्तं स कल्पद्रुकल्पम् ॥ ९ ॥
मन्त्रीशेन जिनेश्वरस्य पुरतः कर्पूरपूरागुरु-
क्षोपप्रेङ्खितधूपधूमपटलैः सा कापि तेने मुदा ।
यावद्रूढमहाध्वजप्रणयिनी स्वर्लोककल्लोलिनी
मिश्रेयं रविकन्यकेति वियति प्रत्यक्षमुत्प्रेक्ष्यते ॥ १० ॥
इत्थं तत्र विधाय निर्मलमनाः सन्मानदानक्रियां
सानन्दप्रमदाकुलां कुलनभोमाणिक्यमष्टाह्निकाम् ।
विघ्नोन्मर्दिकपर्दियक्षविहितप्रत्यक्षसान्निध्यतः
श्रद्धावर्द्धितसम्मदादुदतरन्मन्त्रीश्वरो भूधरात् ॥ ११ ॥
अजाहराख्ये नगरे च पार्श्वपादानजापालनृपालपूज्यान् ।
अभ्यर्चयन्नेष पुरे च कोडीनारे स्फुरत्कीर्त्तिकदम्बमम्बाम् ॥ १२ ॥
देवपत्तनपुरे पुरन्दरस्तूयमानममृतांशुलाञ्छनम् ।
अर्चयन्नुचितचातुरीचितः कामनिर्मथननिर्मलद्युतिम् ॥ १३ ॥
प्रीतस्फीतरुचिश्चिराय नयनैर्वामभ्रुवां वामन-
स्थल्यामेष मनोविनोदजननं कृत्सप्रवेशं पुरि ।
धीमान्निर्मलधर्मनिर्मितिसमुल्लासेन विस्मापयन्
दैवं रैवतकाधिरोहमकरोत्सङ्घेन सङ्घेश्वरम् ॥ १४ ॥ ( विशेषकम् )
गजेन्द्रपदकुण्डस्य तत्र पीयूषहारिभिः ।
चकार मज्जनं मन्त्री वारिभिः पापहारिभिः ॥ १५ ॥
जिनमज्जनसज्जसज्जनं कलशान्यस्ततदम्बुकुङ्कुमम् ।
अथ सङ्घमवेक्ष्य सङ्कटे विदधे वासवमण्डपोद्यमम् ॥ १६ ॥
संरम्भसङ्घटितसङ्घजनौघदृष्टामष्टाह्निकामयमिहापि कृती वितेने ।
सद्भूतभावभरभासुरचित्तवृत्तिरुद्वृत्तकीर्त्तिचयचुम्बितदिक्कदम्बः ॥ १७ ॥
लुम्पन् रजो विजयसेनमुनीशपाणिवासप्रवासितकुवासनभासमानः ।
सम्यक्त्वरोपणकृते विततान नन्दिमानन्दमेदुरमयं रमयन्मनांसि ॥ १८ ॥
दानैरानन्द्य वन्दिव्रजमसृजदनिर्वारमाहारदानं
मानी सम्मान्य साधूनपुपदपि मुखोद्घाटकर्मादिकानि ।

मन्त्री सत्कृत्य देवार्चनरचनपरानर्चयित्वाथमुचै-
रम्बाप्रद्युम्नशाम्बानिति कृतसुकृतः पर्वतादुत्ततार ॥ १९ ॥
असाधि साधर्मिकमानदानैरनेन नानाविधधर्मकर्म ।
अबाधि सा धिक्करणेन माया निर्माय निर्मायमनः सुपूजाम् ॥२०॥
पुरः पुरः पूरयता पयांसि घनेन सान्निध्यकृता कृतीन्दुः ।
स्वकीर्त्तिवन्नव्यनदीर्ददर्श ग्रीष्मेऽतिभीष्मेऽपि पदे पदेऽसौ ॥२१॥
इति प्रतिज्ञामिव नव्यकीर्त्तिप्रियः प्रयाणैरतिवाह्य वीथीम् ।
आनन्दनिस्यन्दविधिर्विधिज्ञः पुरं प्रपेदे धवलक्ककं सः ॥ २२ ॥
समं तेजःपालान्वितपुरजनैर्वीरधवल-
प्रभुः प्रत्युद्यातस्तदनु सदनं प्राप्य सुकृती ।
युतः सङ्घेनासौ जिनपतिमथोत्तार्य रथत-
स्ततः सङ्घस्यार्चामशनवसनाद्यैर्व्यरचयत् ॥ २३ ॥
अथ प्रसादाद्भर्त्तुः प्राप्य वैभवमद्भुतम् ।
मन्त्रीशः सफलीचक्रे स्वमनोरथपादपम् ॥ २४ ॥
भक्त्याखण्डलमण्डपं नवनवश्रीकेलिपर्यङ्किका-
वर्यं कारयति स्म विस्मयमयं मन्त्री स शत्रुञ्जये ।
यत्र स्तम्भनरैवतप्रभुजिनौ शाम्बाम्बिकालोकन-
प्रद्युम्नप्रभृतीनि किञ्च शिखराण्यारोपयामासिवान् ॥ २५ ॥
गुरुपूर्वजसम्बन्धिमित्रमूर्त्तिकदम्बकम् ।
तुरङ्गसङ्गतं मूर्त्तिद्वयं स्वस्यानुजस्य च ॥ २६ ॥
शातकुम्भमयान् कुम्भान्पञ्च तत्र न्यवेशयत् ।
पञ्चधा भोगसौख्यश्रीनिधानकलशानिव ॥ २७ ॥
सौवर्णं दण्डयुग्मं च प्रासादद्वितये न्यधात् ।
श्रीकीर्त्तिकन्दयोर्व्यक्तनाङ्कुरसोदरम् ॥ २८ ॥
कुन्देन्दुसुन्दरग्रावपावनं तोरणद्वयम् ।
इहैव श्रीसरस्वत्योः प्रवेशायैव निर्ममे ॥ २९ ॥
अर्कपालितकं ग्राममिह पूजाकृते कृती ।
श्रीवीरधवलक्ष्मापाद्दापयामास शासने ॥ ३० ॥
श्रीपालिताख्ये नगरे गरीयस्तरङ्गलीलादलितार्कतापम् ।
तडागमागःक्षयहेतुरेतच्चकार मन्त्री ललिताभिधानम् ॥ ३१ ॥

हर्षोत्कर्षं न केषां मधुरयति सुधासाधुमाधुर्यगर्ज-
त्तोयः सोऽयं तडागः पथि मथितमिलत्पान्थसन्तापपापः ।
साक्षादम्भोजदम्भोदितमुदितमुखं लोलरोलम्बशब्दै-
रब्देव्यो दुग्धमुग्धां त्रिजगति जगदुर्यत्र मन्त्रीशकीर्त्तिम् ॥ ३२ ॥
पृष्ठपत्रं च सौवर्णं श्रीयुगादिजिनेशितुः ।
स्वकीयतेजःसर्वस्वकोशन्यासमिवार्पयत् ॥ ३३ ॥
प्रासादे निदधे काम्यकाञ्चनं कलशत्रयम् ।
ज्ञानदर्शनचारित्रमहारत्ननिधानवत् ॥ ३४ ॥
किञ्चैतन्मन्दिरद्वारि तोरणं तत्र पोरणम् ।
शिलाभिर्विदधे ज्योत्स्नागर्वसर्वस्वदस्युभिः ॥ ३५ ॥
लोकैः पाञ्चालिकानृत्तसंरम्भस्तम्भितेक्षणैः ।
इहाभिनीयते दिव्यनाट्यप्रेक्षाक्षणः क्षणम् ॥ ३६ ॥
प्रासादः स्फुटमच्युतैकमहिमा श्रीनाभिसूनुप्रभो-
स्तस्याग्रस्थितिरेककुण्डलकुलां धत्तेतरां तोरणः ।
श्रीमन्त्रीश्वर वस्तुपाल कलयन्नीलाम्बरालम्बिता-
मत्युच्चैर्जगतोऽपि कौतुकमसौ नन्दी तवास्तु श्रिये ॥ ३७ ॥
अत्र यात्रिकलोकानां विशतां व्रजतामपि ।
सर्वथा सम्मुखैवास्ति लक्ष्मीरुपरिवर्त्तिनी ॥ ३८ ॥
यत्पूर्वैर्न निराकृतं सुकृतिभिः साम्मुख्यवैमुख्ययो-
र्द्वैतं तन्मम वस्तुपालसचिवेनोन्मूलितं दुर्यशः ।
आशास्तेऽद्भुततोरणोभयमुखी लक्ष्मीस्तदस्मै मुदा
श्रीनाभेयविभुप्रसादवशतः साम्मुख्यमेवाऽधुना ॥ ३९ ॥
तस्यानुजश्च जगति प्रथितः पृथिव्यामव्याजपौरुषगुणप्रगुणीकृतश्रीः ।
श्रीतेजपाल इति पालयति क्षितीन्दुमुद्रां समुद्ररसनावधिगीतकीर्त्तिः ॥ ४० ॥
समुद्रत्वं श्लाघेमहि महिमधाम्नोऽस्य बहुधा
यतो भीष्मग्रीष्मोपमविषमकालेप्यजनि यः ।
क्षणेन क्षीणायामितरजनदानोदकनतौ
दयावेलाहेलाद्विगुणितगुणत्यागलहरिः ॥ ४१ ॥
वस्त्रापथस्य पन्थास्तपस्विनां ग्रामग्रासनोद्धारात् ।
येनापनीय नवकरमनवकरः कारयाञ्चक्रे ॥ ४२ ॥

पुण्योल्लासविलासलालसधिया येनात्र शत्रुञ्जये
श्रीनन्दीश्वरतीर्थमर्पितजगत्पावित्र्यमासूत्रितम् ।
एतच्चानुपमासरः परिसरोद्देशे शिलासञ्चय-
व्यानद्धोद्धतवन्यसुन्दरपयःकल्लोललुप्तक्रमम् ॥ ४३ ॥
स्फुटस्फटिकदर्पणप्रतिमतामिदं गाहते
सुधाकृतसुधाकरच्छविपवित्रनीरं सरः ।
विकस्वरसरोरुहप्रकरलक्ष्यतो लक्ष्यते
यदत्र सरिदङ्गनावदनबिम्बताडम्बरः ॥ ४४ ॥
शत्रुञ्जये यः सरसीं निवेश्य श्रीरैवताद्रौ च जडाधराणाम् ।
ग्रामस्य दानेन करं निवार्य सङ्घस्य सन्तापमपाचकार ॥ ४५ ॥
क्षोणीपीठमियद्रजःकणमियत्पानीयबिन्दुः पतिः
सिन्धूनामियदङ्गुलं वियदियत्काला च कालस्थितिः ।
इत्थं तथ्यमवैति यस्त्रिभुवने श्रीवस्तुपालस्य तां
धर्मस्थानपरम्परां गणयितुं शङ्के न सोऽपि क्षमः ॥ ४६ ॥
एतत्सुवर्णरचितं विश्वालङ्करणमनणुगुणरत्नम् ।
सङ्घाधीश्वरचरितं हृतदुरितं कुरुत हृदि सन्तः ॥ ४७ ॥
श्रीनागेन्द्रमुनीन्द्रगच्छतरणिः श्रीमान्महेन्द्रप्रभु-
र्जज्ञे क्षान्तिसुधानिधानकलशः पुण्याब्धिचन्द्रोदयः ।
सम्मोहोपनिपातकातरतरे विश्वेऽत्र तीर्थेशितुः
सिद्धान्तोऽप्यविभेद्यतर्कविषमं यं दुर्गमाशिश्रिये ॥ ४८ ॥
तत्सिंहासनपूर्वपर्वतशिरःप्राप्तोदयः कोऽप्यभू-
द्भास्वानस्तसमस्तदुस्तमतमाः श्रीशान्तिसूरिप्रभुः ।
प्रत्युज्जीवितदर्शनद्युतिलसद्भव्यौघपद्माकरं
तेजश्छन्नदिगम्बरं विजयते तद्यस्य लोकोत्तरम् ॥ ४९ ॥
आनन्दसूरिरिति तस्य बभूव शिष्यः
पूर्वापरः शमधनोऽमरचन्द्रसूरिः ।
धर्मद्विपस्य दशनाविव पापवृक्ष-
क्षोदक्षमौ जगति यौ विशदौ विभातः ॥ ५० ॥
अस्ताघवाङ्मयपयोनिधिमन्दराद्रि-
मुद्रापुषोः किमनयोः स्तुमहे महिम्नः ।

बाल्येऽपि निर्दलितवादिगजौ जगाद
यौ व्याघ्रसिंहशिशुकाविति सिद्धराजः ॥ ५१ ॥
सिद्धान्तोपनिषन्निषण्णहृदयो धीजन्मसूस्तत्पदे
पूज्यः श्रीहरिभद्रसूरिरभवच्चारित्रिणामग्रणीः ।
भ्रान्त्वा शून्यमनाश्रयैरिव चिरायस्मिन्नवस्थानतः
सन्तुष्टैः कलिकालगौतम इति ख्यातिर्वितेने गुणैः ॥ ५२ ॥
श्रीविजयसेनसूरिस्तत्पट्टे जयति जलधरध्वानः ।
यस्य गिरो धारा इव भवदवभवदवथुविभवभिदः ॥ ५३ ॥
पश्चासराह्ववनराजविहारतीर्थे
प्रालेयभूमिधरभूतिधुरन्धरेऽस्मिन् ।
साक्षादधःकृतभवा तदिनीव यस्य
व्याख्येयमच्युतगुरुक्रमजा विभाति ॥ ५४ ॥
भवोद्भटवनावनीविकटकर्मवंशावलि-
च्छिदोच्छलितमौक्तिकप्रतिमकीर्तिकर्णाम्बरम् ।
असिश्रियमशिश्रियद्विततभीव्रतं यद्व्रतं
क्षितौ विजयतामयं विजयसेनसूरिर्गुरुः ॥ ५५ ॥
शिष्यं तस्य प्रशस्यप्रशमगुणनिधिं रम्यदारण्यदाव-
ज्वालाजिह्वालदीप्तिर्भविकजनविपद्व्यह्विवादैः कपर्दी ।
देवी चाम्बा निशीथे समसमयमुपागत्य हर्षाश्रुवर्षा-
मेयश्रेयःसुभिक्षाविति निजगदतुर्गद्गदोद्दामनादम् ॥ ५६ ॥
नाभूवन्कति नाम सन्ति कति नो नो वा भविष्यन्ति के
किं न क्वापि कदापि सद्गुपुरुषः श्रीवस्तुपालोपमः ।
यत्रेत्थं महरन्नहर्निशमहो सर्वाभिसारोङ्कुरो
येनायं विजितः कलिर्विदधता तीर्थेशयात्रोत्सवम् ॥ ५७ ॥
तस्मादस्य यशस्विनः सुचरितं श्रीवस्तुपालस्य य-
द्वाचास्माकममोघया किल यथाध्यक्षीकृतं सर्वथा ।
त्वं श्रीमदुदयप्रभ प्रथय तत् पीयूषसर्वङ्कषैः
श्लोकैर्येस्तव भारती समभव·······यते ॥ ५८ ॥
इत्युक्त्वा गतयोस्तयोरथ पथो दृष्टेः प्रभातक्षणे
विज्ञाप्य स्वगुरोः पुरः सविनयं नम्रीभवन्मौलिना ।

प्राप्यादेशममुं प्रभोर्विरचयामासे समासेदुषा
प्रागल्भीमुदयप्रभेण चरितं निस्यन्दरूपं गिराम् ॥ ५९ ॥
किञ्च श्रीमलधारिगच्छजलधिप्रोल्लासशीतद्युते-
स्तस्यश्रीनरचन्द्रसूरिसुगुरोर्माहात्म्यमाशास्महे ।
यत्पाणिस्मितपद्मवासविकसत्किञ्जल्कसंवासिताः
सन्तः सन्ततमाश्रिताः किल मया भृङ्गयेव भान्ति क्षितौ ॥ ६० ॥
श्रीधर्माभ्युदयाह्वयेऽत्र चरिते श्रीसङ्घभर्तुर्मया
दध्रे काव्यदलानि सङ्घटयितुं कर्मान्तिकत्वं परम् ।
किन्तु श्रीनरचन्द्रसूरिभिरिदं संशोध्य चक्रे जग-
त्पावित्र्यक्षमपादपङ्कजरजःपुञ्जैः प्रतिष्ठास्पदम् ॥ ६१ ॥
नित्यं व्योमनि नीलनीरजरुचौ यावत्त्विषामीश्वरो
दिक्पालावलिबन्धुरे कुवलये यावच्च हेमाचलः ।
हृत्पद्मे विदुषामिदं सुचरितं तावन्नवाविर्भव-
त्सौरभ्यप्रसरं चिरं कलयतात् किञ्जल्कलक्ष्मीपदम् ॥ ६२ ॥

इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये श्रीवस्तुपालतीर्थयात्रोत्सववर्णनो नाम पञ्चदशः सर्गः ।

मुक्तेर्मार्गे यदेतद्विरचितमुचितं सङ्घभर्तुश्चरित्रं
सत्रं पावित्र्यपात्रं पथिकजनमनःखेदविच्छेदहेतुः ।
अस्मिन्सौरभ्यगर्भामसमरसवतीं सत्कथां पान्थसार्थाः
प्राप्य श्रीवस्तुपाल प्रवरनवरसास्वादमास्वादयन्ति ॥ १ ॥
श्रीशारदैकसदनं हृदयालवः के नो सन्ति हन्त सकलासु कलासु निष्णाः ।
तादृक्परस्य ददृशे सुकवित्वतत्त्वबोधाय बुद्धिविभवस्तु न वस्तुपालात् ॥ २ ॥
नैव व्यापारिणः के विदधति करणग्राममात्मैकवश्यं
लेभे सद्योगसिद्धेः फलममलमलं केवलं वस्तुपालः ।
आकल्पस्थायि धर्माभ्युदयनवमहाकाव्यनाम्ना यदीयं
विश्वस्यानन्दलक्ष्मीमिति दिशति यशोधर्मरूपं शरीरम् ॥ ३ ॥

---

# APPENDIX II.

## रेवयकप्पसंखेवो

सिरिनेमिजिणं सिरसा नमिउं रेवयगिरीसकप्पंमि।
सिरिवइरसीसभणिअं जहा य पालित्तएणं च ॥ १ ॥

छत्तसिलाइसमीवे सिलासणे दिक्खं पडिवन्नो नेमी, सहसंबवणे केवलनाणं, लक्खारामे देसणा, अवलोअणं उड्ढसिहरे निव्वाणं। रेवयमेहलाए कण्हो तत्थ कल्लाणतिगं काऊण सुवन्नरयणपडिमालंकिअं चेइअतिगं जीवंतसामिणी अंबादेविं च कारेइ। इंदो वि वज्जेण गिरिं कोरेऊण सुवन्नबलाणयं रूप्पमयं चेईअं रयणमया पडिमा पमाणवन्नोववेया, सिहरे अंबा रंगमंडवे अवलोअणसिहरं बलाणयमंडवे संबो एयाइं कारेइ। सिद्धविणायगो पडिहारो; तप्पडिरूवं श्रीनेमिमुखात् निर्वाणस्थानं ज्ञात्वा निर्वाणादनन्तरं कण्हेण ठाविअं। तहा सत्त जायवा दामोयराणुरूवा कालमेह १ मेहनाद २ गिरिविदारण ३ कपाट ४ सिंहनाद ५ खोडिक ६ रेवया ७ तिव्वतवेणं कीडणेणं खित्तवाला उववन्ना। तत्थ य मेहनादो सम्मदिट्ठी नेमिपयभत्तिजुत्तो चिट्ठइ। गिरिविदारणेणं कंचणबलाणयंमि पंच उद्धारा विउव्विआ। तत्थेगं अंबापुरओ उत्तरदिसाए सत्तहिअसयकमेहिं गुहा। तत्थ य उववासतिगेणं बलिविहाणेणं सिलं उप्पाडिऊण मज्झे गिरिविदारणपडिमा। तत्थ य कमपण्णासं गए बलदेवेणं कारिअं सासयजिणपडिमारूवं नमिऊण, उत्तरदिसाए पण्णासकमं बारीतिगं। पढमवारिआए कमसयतिगं गंतूण, गोदोहिआसणेणं पविसिऊण, उपवासपंचगं भमररूवं दारुणं सत्तेणं उप्पाडिऊणं, कम्मसत्ताओ अहोमुहं पविसिऊण, बलाणयमंडवे इंदादेसेण धणयजक्ककारियं अंबादेविं पूइऊण, सुवण्णजालीए ठायव्वं। तत्थट्ठिएणं सिरिमूलनाहो नेमिजिणिंदो वंदिअव्वो। बीअवारीए एगं पायं पइत्ता, सयंवरवावीए अहो कमचालीसं गमित्ता, तत्थ णं मज्झवारीए कमसत्तसएहिं कूवो। तत्थ वरहंसट्ठिअत्तेण इहावि मूलनायगो वंदेयव्वो। तइअवारीए मूलदुवारपवेसो अंबाएसेण न अन्नहा। एवं कंचणबलाणयमग्गो। तत्थ य अंबापुरओ हत्थवीसाए विवरं। तत्थ य अंबाएसेण उववासतिगेण सिलुग्घाडणेण हत्थवीसाए संपुडसत्तगं समुग्गयपंचगं अहो रसकूविआ अमावसाए अमावसाए उग्घडइ। तत्थ य उववासतिगं काऊण

अंबाएसेण धूयणेण वलिविहाणेणं गिण्हियव्वं । तहा य जुण्णकूडे उववासतिगं काऊण सरलमग्गेण बलिपूअणेणं सिद्धविणायगो उवलब्भइ । तत्थ य चिंतिअसिद्धी दिनमेगं ठाएयव्वं । जइ तहा पचक्खो हवइ तहा रायमईगुहाए कमसएणं गोदोहिआए रसकूविआ कसिणचित्तयवल्ली राइमईए पडिमा रयणमया अंबाया रूप्पमयाओ अणेगओसहीओ अ चिट्ठंति । तह छत्तसिलाघंटसिलाकोडिसिलातिगं पण्णत्तं। छत्तसिलं मज्झं मज्झेणं कणयवल्ली सहस्संबवणमज्झे रययसुवण्णमयचउवीसं लक्खारामे बावत्तरीचउवीसजिणाण गुहा पण्णत्ता। कालमेहस्स पुरओ सुवण्णवालुआए नईए सड्ढकमसयतिगेण उत्तरदिसाए गमित्ता गिरिगुहं पविसिऊण उदए णहवणं काऊण, बिए उववासपओएहिं दुवारमुग्घाडेइ। मज्झे पढमदुवारे सुवण्णखाणी, दुइअदुवारे रयणखाणी, संघहेउं अंबाए विउव्विआ। तत्थ पण कण्हभंडारो। अण्णो दामोदरसमीवे। अंजणसिलाए अहोभागे रययसुवण्णधूली पुरिसवीसेहिं पण्णत्ता।

तस्सत्थमणे मंगलयदेवदालीय संतु रससिद्धी।
सिरिवइरोवक्खायं संघसमुद्धरणकज्जंमि॥
सस्सकडाहं मज्झे गिण्हित्ता कोडिबिंदुसंयोगे।
घंटसिलाचुण्णयजोयणाओ अंजणसिद्धी।
विज्जापाहुडदेसाओ रेवयकप्पसंखेवो सम्मत्तो॥

## APPENDIX III.

### श्रीउज्जयन्तस्तवः

नामभिः श्रीरैवतकोज्जयन्ताद्यैः प्रथामितम् ।
श्रीनेमिपावितं स्तौमि गिरिनारं गिरीश्वरम् ॥ १ ॥
स्थाने देशः सुराष्ट्राख्यां बिभर्ति भुवनेष्वसौ ।
यद्भूमिकामिनीभाले गिरिरेष विशेषकः ॥ २ ॥
शृङ्गारयन्ति खङ्गारदुर्गं श्रीऋषभादयः ।
श्रीपार्श्वस्तेजलपुरं भूषितैतदुपत्यकम् ॥ ३ ॥
योजनद्वयतुङ्गेऽस्य शृङ्गे जिनगृहावलिः ।
पुण्यराशिरिवाभाति शरच्चन्द्रांशुनिर्मला ॥ ४ ॥
सौवर्णदण्डकलशामलसारकशोभितम् ।
चारु चैत्यं चकास्त्यस्योपरि श्रीनेमिनः प्रभोः ॥ ५ ॥
श्रीशिवासूनुदेवस्य पादुकाऽत्र निरीक्षिता ।
स्पृष्टाऽर्चिता च शिष्टानां पापव्यूहं व्यपोहति ॥ ६ ॥
प्राज्यं राज्यं परित्यज्य जरत्तृणमिव प्रभुः ।
बन्धून्विधूय च स्निग्धान् प्रपेदेऽत्र महाव्रतम् ॥ ७ ॥
अत्रैव केवलं देवः स एव प्रतिलब्धवान् ।
जगज्जनहितैषी स पर्यणैषीच निर्वृतिम् ॥ ८ ॥
अत एवात्र कल्याणत्रयमन्दिरमादधे ।
श्रीवस्तुपालो मन्त्रीशश्चमत्कारितभव्यहृत् ॥ ९ ॥
जिनेन्द्रबिम्बपूर्णेन्द्रमण्डपस्था जना इह ।
श्रीनेमेर्मज्जनं कर्तुमिन्द्रा इव चकासति ॥ १० ॥
गजेन्द्रपदनामास्य कुण्डं मण्डयते शिरः ।
सुधाविधैर्जलैः पूर्णं स्नानार्हत्स्नपनक्षमैः ॥ ११ ॥
शत्रुञ्जयावतारेऽत्र वस्तुपालेन कारिते ।
ऋषभः पुण्डरीकोऽष्टापदो नन्दीश्वरस्तथा ॥ १२ ॥
सिंहयाना हेमवर्णा सिद्धबुद्धसुतान्विता ।
कम्राम्रलुम्बिभृत्पाणिरत्राम्बा सङ्घविघ्नहृत् ॥ १३ ॥

श्रीनेमिपत्पद्मपूतमवलोकननामकम् ।
विलोकयन्तः शिखरं यान्ति भव्याः कृतार्थताम् ॥ १४ ॥
शाम्बो जाम्बवतीजातस्तुङ्गे शृङ्गेऽस्य कृष्णजः ।
प्रद्युम्नश्च महाद्युम्नस्तेपाते दुस्तपं तपः ॥ १५ ॥
नानाविधौषधिगणा जाज्वलन्त्यत्र रात्रिषु ।
किञ्च घण्टाक्षरच्छत्रशिलाः शालन्त उच्चकैः ॥ १६ ॥
सहस्राम्रवणं लक्षारामोऽन्येपि वनव्रजाः ।
मयूरकोकिलाभृङ्गीसङ्गीतिसुभगा इह ॥ १७ ॥
न स वृक्षो न सा वल्ली न तत्पुष्पं न तत्फलम् ।
नेक्ष्यतेऽत्राभियुक्तैर्यदित्यैतिह्यविदो विदुः ॥ १८ ॥
राजीमती गुहागर्भे कैर्न नामात्र वन्द्यते ।
रथनेमिर्यथोन्मार्गात्सन्मार्गमवतारितः ॥ १९ ॥
पूजास्नपनदानानि तपश्चात्र कृतानि वै ।
सम्पद्यन्ते मोक्षसौख्यहेतवो भव्यजन्मिनाम् ॥ २० ॥
दिग्भ्रमावपि योऽत्राद्रौ क्वाप्यमार्गेऽपि सञ्चरन् ।
सोऽपि पश्यति चैत्यस्था जिनार्चाः स्नपितार्चिताः ॥ २१ ॥
काश्मीरागतरत्नेन कूष्माण्ड्यादेशतोऽत्र च ।
लेप्यबिम्बास्पदे न्यस्ता श्रीनेमेर्मूर्तिराश्मनी ॥ २२ ॥
नदीनिर्झरकुण्डानां खनीनां वीरुधामपि ।
विदाङ्कुरोत्यत्र सङ्ख्याः सङ्ख्यावानपि कः खलु ॥ २३ ॥
आसेचनकरूपाय महातीर्थाय तायिने ।
चैत्यालङ्कृतशीर्षाय नमः श्रीरैवताद्रये ॥ २४ ॥
स्तुतो मयेति सूरीन्द्रवर्णितात्तूजिनप्रभः ।
गिरिनारस्तारहेमसिद्धिभूमिर्मुदेऽस्तु वः ॥ २५ ॥

इति श्रीउज्जयन्तस्तवः ॥

---

## APPENDIX VI.

# श्रीउज्जयन्तमहातीर्थकल्पः

अत्थि सुरट्ठाविसए उज्जिंतो नाम पव्वओ रम्मो ।
तस्सिहरे आरुहिउं भत्तीए नमह नेमिजिणं ॥ १ ॥
अंबाइअं च देविं ण्हवणच्चणगंधधूवदीवेहिं ।
पूइयकयप्पणामा ता जोअह जेण अत्थत्थी ॥ २ ॥
गिरिसिहरं कुहरकंदरनिज्झरणकवाडविअडकूवेहिं ।
जोएह खत्तवायं जह भणियं पुव्वसूरीहिं ॥ ३ ॥
कंदप्पदप्पकप्परणकुणइविद्दवणनेमिनाहस्स ।
निव्वाणसिला नामेण अत्थि भुवणंमि विक्खाया ॥ ४ ॥
तस्स य उत्तरपासे दसधणुहेहिं अहोमुहं विवरं ।
दारंमि तस्स लिंगं अवयाणे धणुह चत्तारि ॥ ५ ॥
तस्स पसुमुत्तगंधो अत्थि रसोपलसएण सयतंबं ।
विंधेहि कुणइ तारं ससिकुंदसमुज्जलं सहसा ॥ ६ ॥
पुव्वदिसाए धणुहंतरेसु तस्सेव अत्थि जागवई ।
पाहाणमया दाहिणदिसागए बारसधणूहिं ॥ ७ ॥
दिस्सइ अ तत्थ पयडो हिंगुलवण्णो अ दिव्वपवररसो ।
विंधेइ सव्वलोहे फरिसेणं अग्गिसंगेणं ॥ ८ ॥
उज्जिंते अत्थि नई विहला नामेण पव्वई पडिमा ।
दावेइ अंगुलीए फरिसरसो पव्वईदारं ॥ ९ ॥
सक्कावयार उज्जिंतगिरिवरे तस्स उत्तरे पासे ।
सोवाणपंतिआए पारेवयवण्णिया पुढवी ॥ १० ॥
पंचगव्वेण बद्धा पिंडीधमिआ करेइ वरतारं ।
फेडइ दरिद्दवाहिं उत्तारइ दुक्कंतारं ॥ ११ ॥
सिहरे विसालसिंगे दीसंते पायकुट्टिमा जत्थ ।
तस्सासन्ने सिहरे कव्वडहडपासहो तारं ॥ १२ ॥
उज्जिंतरेवयवणे तत्थ य सुद्दारवानरो अत्थि ।
सो वामकण्णछित्तो उग्घाडइ विवरवरदारं ॥ १३ ॥
हत्थसएण पविट्ठो दिक्खइ सोवण्णवण्णिआ रुक्खा ।

नीलरसेण सवंता सहस्सवेही रसो नूणं ॥ १४ ॥
तं गहिऊण निअत्तो हणुवंतं छिवइ वामपाएण ।
सो ढक्कइ वरदारं जेण न जाणइ जणो को वि ॥ १५ ॥
उज्जितसिहरउवरिं कोहंडिहरं खु नाम विक्खायं ।
अवरेण तस्स य सिला तदुभयपासेसु ओसं तु ॥ १६ ॥
तं अयसितिल्लमीसं धंमइ पडिवायवंगिअं वंगं ।
दोगच्चवाहिहरणं परितुट्ठा अंबिआ जस्स ॥ १७ ॥
वेगवई नाम नई मणसिलवण्णाइ तत्थ पाहाणा ।
तो पिंडि धमिअ संते समसुद्धे होइ वरतारं ॥ १८ ॥
उज्जंते नाणसिला तस्स अहो कणयवण्णिआ पुढवी ।
वोकडयमुत्तपिंडी खइरंगारे भवे हेमं ॥ १९ ॥
नाणसिलाकयपुढवी पिंडीबद्धा य पंचगव्वेण ।
दढपाए वसइ रसो सहस्सवेही हवइ हेमं ॥ २० ॥
गिरिवरमासन्नठिअं आणीयं तिलविसारणं नाम ।
सिलवड्डगादपोहे वे लक्खा तत्थ दम्माणं ॥ २१ ॥
सेणा नामेण नई सुवण्णतित्थंमि लट्ठुअपहाणा ।
पडिवाएण य सुचं करिंति हेमं न संदेहो ॥ २२ ॥
विल्लक्खयंमि नयरे मउहहरं अत्थि सेलगं दिव्वं ।
तस्स य मज्झंमि ठिओ गणवइरसकुंडओ उवरिं ॥ २३ ॥
उववासी कयपूओ गणवइओ चल्लिऊण पवररसो ।
पामापेवी अत्थि अ थंभइ वंगं न संदेहो ॥ २४ ॥
सहसासवं ति तित्थं करंजकक्केण मणहरं सम्मं ।
तत्थ य तुरयायारा पाहाणा तेमि दो भाया ॥ २५ ॥
इक्को पारयभाओ पिट्ठो सुत्तेण अंधमूसाए ।
धमिओ करेइ तारं उत्तारइ दुक्खकंतारं ॥ २६ ॥
अवलोअणसिहरसिला अवरेणं तत्थ वररसो सवइ ।
सुअपक्खसरिसवण्णो करेइ सुवं वरं हेमं ॥ २७ ॥
गिरिपज्जुन्नयवारे अंबिअआसमपयं च नामेण ।
तत्थ वि पीआ पुहवी हिमवाए होइ वरहेमं ॥ २८ ॥
नाणसिला उज्जिते तस्स य मूलंमि मट्टिआ पीआ ।

साहामिअलेवेणं छायामुक्कं कुणइ हेमं ॥ २९ ॥
उज्जिंतपढमसिहरे आरुहिउं दाहिणेण अवयरिउं ।
तिण्णि धणूसयमित्ते पूईकरं जं विलं नाम ॥ ३० ॥
उग्घाडिउं विलं दिक्खिऊण निउणेण तत्थ गंतव्वं ।
दंडंतराणि बारस दिव्वरसो जंबुफलसरिसो ॥ ३१ ॥
जउ घोलिअंमि भंडे सहस्सभाएण विंधए तारं ।
हेमं करइ अवस्सं हट्टं तं सुंदरं सहसा ॥ ३२ ॥
कोहंडिभवणपुव्वेण उत्तरे जाव तावसा भूमी ।
दीसइ अ तत्थ पडिमा सेलमया वासुदेवस्स ॥ ३३ ॥
तस्सुत्तरेण दीसइ हत्थेसु अ दससु पच्चई पडिमा ।
अवराहमुहरअंगुट्ठिआइ सा दावए विवरं ॥ ३४ ॥
नवधणुहाइं पविट्ठो दिक्खइ कूडाइं दाहिणुत्तरओ ।
हरिआलल्लक्खवण्णो सहस्सवेही रसो नूणं ॥ ३५ ॥
उज्जिंते नाणसिला विक्खाया तत्थ अत्थि पाहाणं ।
ताणं उत्तरपासे दाहिणय अहोमुहो विवरो ॥ ३६ ॥
तस्स य दाहिणभाए दसधणुभूमीइ हिंगुलुयवण्णो ।
अत्थि रसो सयवेही विंधइ सुचं न संदेहो ॥ ३७ ॥
उसहरिसहाइकुंडे पाहाणा ताण संगमो अत्थि ।
गयवरलिंडाकिण्णा मज्झे फरिसेण ते वेही ॥ ३८ ॥
जिणभवणदाहिणेणं नउई धणुहेहिं भूमिजलुअयरी ।
तिरिमणुअरत्तविद्धा पडियाए तंवए हेमं ॥ ३९ ॥
वेगवई नाम नई मणसिलवण्णा य तत्थ पाहाणा ।
सुवस्स पंचवेहं सवंति घमिआ तयं सिग्घं ॥ ४० ॥
इय उज्जयंतकप्पं अविअप्पं जो करेइ जिणभत्तो ।
कोहंडिकयपणामो सो पावइ इच्छिअं सुक्खं ॥ ४१ ॥

श्रीउज्जयतमहातीर्थकल्पः

---

# APPENDIX V

## रैवतकल्पः

पच्छिमदिसाए सुरट्ठाविसए रेवयपव्वयरायसिहरे सिरिनेमिनाहस्स भवणं उत्तुंगसिहरं अच्छइ। तत्थ किर पुव्विं भयवओ नेमिनाहस्स लिप्पमई पडिमा आसि। अन्नया उत्तरदिसाविभूसणकम्हीरदेसाओ अजियरयणनामाणो दुन्नि बंधवा संघाहिवई होऊण गिरिनारमागया। तेहिं रहसवसाओ घणघुसिणरससंपूरिअकलसेहिं ण्हवणं कयं। गलिआ लेवमई सिरिनेमिनाहपडिमा। तओ अईव अप्पाणं सोअंतेहिं तेहिं आहारो पच्चक्खाओ। इक्कवीसउववासाणंतरं सयमागया भगवई अंबिआ देवी। उट्ठाविओ संघवई। तेण देविं दट्ठूण जयजयसद्दो कओ। तओ भणिअं देवीए इमं बिंबं गिण्हिसु परं पच्छा न पिच्छिअव्वं। तओ अजिअसंघाहिवइणा एगतंतुकड्ढिअं रयणमयं सिरिनेमिबिंबं कंचणबलाणए नीअं। पढमभवणस्स देहलीए आरोवित्ता अइहरिसभरनिब्भरेणं संघवइणा पच्छाभागो दिट्ठो। ठिअं तत्थेव बिंबं निच्चलं। देवीए कुसुमवुट्टी कया जयजयसद्दो अ कओ। एअं च बिंबं वइसाहपुन्निमाए अहिणवकारिअभवणे पच्छिमदिसामुहं ठविअं संघवइणा। न्हवणाइमहूसवं काउं अजिओ सबंधवो निअदेसं पत्तो। कलिकाले कलुसचित्तं जणं जाणिऊण झलहलंतमणिमयबिंबस्स कंती अंबिआदेवीए छाइआ। पुव्विं गुज्जरधराए जयसिंहदेवेणं खंगाररायं हणित्ता सज्जणो दंडाहिवो ठाविओ। तेण य अहिणवं नेमिजिणंदभवणं एगारससयपंचासीए विक्कमरायवच्छरे काराविअं। मालवदेसमुहमंडणेणं साहुभावडेणं सोवण्णं आमलसारं कारिअं। चालुक्कचक्किसिरिकुमारपालनरिंदसंठविअसोरट्ठदंडाहिवेण सिरिसिरिमालकुलुब्भवेण बारससयवीसे विक्कमसंवच्छरे पज्जा काराविआ। तब्भाउणा धवलेण अंतराले पवा भराविआ। पज्जाए चडंतेहिं जणेहिं दाहिणदिसाए लक्खारामो दीसइ। अणहिल्लवाडयपट्टणे य पोरवाडकुलमंडणा आसरायकुमरदेवितणया गुज्जरधराहिवइसिरिवीरधवलरज्जधुरंधरा वत्थुपालतेजपालनामधिज्जा दो भायरो मंतिवरा हुत्था। तत्थ तेजपालमंतिणा गिरनारतले निअनामंकिअं तेजलपुरं पवरगढमढपवामंदिरआरामरम्मं निम्माविअं। तत्थ य जणयनामंकिअं आसरायविहारु त्ति पासनाहभवणं काराविअं। जणणीनामेणं च कुमरसरु त्ति सरोवरं निम्माविअं। तेजलपुरस्स पुव्वदिसाए उग्गसेणगढं

नाम दुग्गं जुगाइनाहप्पमुहजिणमंदिररेहिल्लं विज्जइ। तस्स य तिण्णि नामधिज्जाइं पसिद्धाइं। तं जहा उग्गसेणगढं ति वा खंगारगढं ति वा ज्जुण्णदुग्गं ति वा। गढस्स बाहिं दाहिणदिसाए चउरिआवेईलड्डुअओवरिआपसुवाडयाइठाणाइं चिट्ठंति। उत्तरदिसाए विसालथंभसालासोहिओ दसदसारमंडवो। गिरिदुवारे य पंचमो हरी दामोअरो सुवण्णरेहानईपारे वट्टइ। कालमेहसमीवे चिराणुवत्ता संघस्स वोलाविआ। तेजपालमंतिणा मिल्हाविआ। कमेण उज्जयंतसेले वत्थुपालमंतिणा सित्तुज्जावयारभवणं अट्ठावयसंमेअमंडवो कवडिजक्खमरुदेविपासाया य काराविआ। तेजपालमंतिणा कल्लाणत्तयचेइअं, इंदमंडवो अ देपालमंतिणा उद्धाराविओ। एरावणगयपयमुद्दाअलंकिअं गइंदपयकुंडं अच्छइ। तत्थ अंगं पक्खालित्ता दुक्खाण जलंजलिं दिंति जत्तागयलोआ। छत्तसिलाकडणीए सहस्संबवणारामो, जत्थ भगवओ जायवकुलपईवस्स सिवासमुद्दविजयनंदणस्स दिक्खानाणनिव्वाणकल्लाणयाइं संजाआइं। गिरिसिहरे चडित्ता अंबिआदेवीए भवणं दीसइ। तत्तो अवलोअणं सिहरं। तत्थट्ठिएहिं किर दसदिसाओ नेमिसामी अवलोइज्जति। तओ पढमसिहरे संबकुमारो बीअसिहरे पज्जुण्णो। इत्थ पव्वए ठाणे ठाणे चेइएसु रयणसुवण्णमयजिणबिंबाइं निचन्हविअचिआइं दीसंति। सुवण्णमेयणी अ अणेगधाउरसमेइणी दिप्पंती दीसइ। रत्तिं च दीवउव्व पज्जलंतीओ ओसहीओ अवलोइज्जंति। नाणाविहतरुवरवल्लिदलपुप्फफलाइं पए पए उवलब्भंति। अणवरयपज्झरंतनिज्झरणाणं खलहलारावा य मत्तकोयलभमरझंकारा य सुचंति त्ति।

उज्जयंतमहातित्थकप्पसेसलवो इमो।
जिणप्पहमुणिंदेहिं लिहिओत्थ जहासुअं॥

श्रीरैवतकल्पः समाप्तः

---

# APPENDIX VI

## अम्बिकादेवीकल्पः

सिरिउज्जयंतसिहरसेहरं पणमिऊण नेमिजिणं ।
कोहंडिदेविकप्पं लिहामि वुड्ढोवएसाओ ॥

अत्थि सुरट्ठाविसये धणकणयसंपयजणसमिद्धं कोडीनारं नाम नयरं । तत्थ सोमो नाम रिद्धिसमिद्धो छक्कम्मपरायणो वेयागमपारगमो वंभणो हुत्था । तस्स घरिणी अंबिणी नाम महग्घसीलालंकारभूसियसरीरा आसि । तेसिं विसयसुहमणुहवंताणं उप्पन्ना दुवे पुत्ता पढमो सिद्धो बीओ बुद्ध त्ति । अन्नया समागए पिअरपक्खे भट्टसोमेणं निमंतिआ वंभणा सद्धदिणे । कत्थ वि ते वेयमुच्चारन्ति, कत्थ वि आढवन्ति पिण्डपयाणं, कत्थ वि होमं करिंति वइसदेवं च । सम्पाडिआ सालिदालिवंजणपक्कन्नमेअखीरखण्डपमुहा जेमणा । अंबिणीए अ सासुआ ण्हाणं काउं पयट्टा । तम्मि अवसरे एगो साहू मासोववास-पारणए भिक्खट्ठा संपत्तो । तं पलोइत्ता हरिसभरनिब्भरपुलइअंगी उट्ठिआ अंबिणी । पडिलाभिओ तीए मुणिवरो भत्तिबहुमाणपुव्वं अन्नपाणेहिं भत्त-पाणेहिं । जाव गहिअभिक्खो साहू चलिओ ताव सासुआ वि ण्हाऊण रसवई-ठाणमागया । न पिच्छइ पढमसिहं । तओ तीए कुविआए पुट्ठा बहुआ । तीए जहट्ठिए वुत्ते अंबाडिआ सा अज्जूए । जहा पावे किमेयं तए कयं, अज्ज वि देवया न पूईआ अज्ज वि न भुंजाविआ विप्पा अज्ज वि न भरिआइं पिंडाइं अग्गसिहा तए किमत्थं साहुणो दिन्ना । तउ तीए भणिओ सव्वो वि वइअरो सोमभट्टस्स । तेण संरुट्ठेण अप्पच्छंदिअ त्ति निक्कालिआ गिहाओ । सा पडिभवदूमिआ सिद्धं करंगुलीए धरित्ता बुद्धं च कडीए चडावित्ता चलिआ नयराओ बाहिं । पंथे तिसाभिभूएहिं दारएहिं जलं मग्गिआ । जाव सा अंसुजलपुन्नलोअणा संवुत्ता ताव पुरओ ठिअं सुक्कसरोवरं तिस्सा अणग्घेणं सीलमाहप्पेणं तक्खणं जलपूरिअं जायं । पाइआ दोन्नि सीअलं नीरं । तओ छुहिएहिं भोअणं मग्गिआ बालएहिं । पुरओ सुक्कसहयारतरू तक्खणं फलि-ओ । दिन्नाइं फलाइं । अंबिणीए तेसिं जाया ते सुत्था । जाव सा चूअछायाए वीसमइ ताव जं जायं तं निसामेह जं तीए बालयाई पढमं जेमाविआ तेसिं भुत्तु-त्तरं पत्तलीओ तीए बाहिं उज्झिआओ आसि ताओ सीलमाहप्पाकंपिअमणाए सासणदेवयाए सोवन्नकचोलयरूवाओ कयाओ । जे अ उच्छिट्ठसित्थकणा भूमीए पडिआ ते मुत्तिआइं संपाईआइं । अग्गसिहा य सिहरेसु तहेव

दंसिआ । एअमचक्खुअं सासुए दट्ठूण निवेईअं सोमविप्पस्स सिद्धं च जहा वच्छ सुलक्खणा पइव्वया य एसा वहू ता पचाणोहिं एअं कुलहरं ति जणणीपेरिओ पच्छायावानलडज्झंतमाणसो गओ वहुयं वालेउं सोमभट्टो। तीए पिट्ठओ आगच्छन्तं दिअवरं निअवरं दट्ठूण दिसाओ पलोईआओ । दिट्ठओ अग्गओ मग्गकूवओ। तओ जिणवरं मणे अणुसरिऊण सुपत्तदाणं अणुमोअंतीए अप्पा कूवंमि झंपाविओ। सुहज्झवसाणेण पाणे चइऊण ऊप्पन्ना कोहंडविमाणे सोहम्मकप्पहिट्ठे चउहिं जोअणेहिं अंबीअदेवी नाम महड्ढिआ देवी। विमाणनामेणं कोहंडी वि भन्नइ । सोमभट्टेण वि तीसे महासईए कूवे पडणं दट्ठुं अप्पा तत्थेव झंपाविओ। सो अ मरिऊण तत्थेव जाओ देवो। आभिओगिअकम्मुणा सिंहरूवं विउव्वित्ता तीए चेव वाहणं जाओ । अन्ने भणंति अंविणी रेवयसिहराओ अप्पाणं झंपावित्ता तप्पिट्ठओ सोमभट्टो वि तहेव मओ । सेसं तं चेव । सा य भगवई चउब्भुआ दाहिणहत्थेसु अंबलुंबिं पासं च धारेइ वामहत्थेसु पुण पुत्तं अंकुसं च धारेइ उत्ततकणयसवण्णं च वण्णमुव्वहइ सरीरे। सिरिनेमिनाहस्स सासणदेवय त्ति निवसइ रेवइगिरिसिहरे। मउडकुंडलमुत्ताहलहाररयणकंकणनेउराइसव्वंगीणाभरणरमणिज्जा पूरेइ सम्मदिट्ठीण मणोरहे निवारेइ विग्घसंघायं । तीए मंतमंडलाईणि आराहित्ताणं भविआणं दीसंति अणेगरूवाओ रिद्धिसिद्धिओ, न पहवंति भूअपिसायसाइणीविसमग्गहा, संपज्जंति पुत्तकलत्तमित्तधणधन्नरज्जसिरिओ त्ति ।

अंबिआमंता इमे ।

वयवीअसकुलकुलजलहरिद्दयअकंनपेआइं ।
पणइणिवापावसिओ अंबिअदेवीइ अह मंतो ॥ १ ॥
पुयभुवणदेवि संपुक्खिपासअंकुसतिलोअपंचसरा ।
णहसिहिकुलकलअज्झासियमायापरपणामपयं ॥ २ ॥
वागुब्भवं तिलोअं पाससिणीहाउ तइअवन्नस्स ।
कूहंडअंबिआए नमु त्ति आराहणामंतो ॥ ३ ॥

एवं अन्ने वि अंबादेवीमंता अप्पपररक्खा वि सया सुरमणा जुग्गा मग्गसेमाइगोअरा य बहवो चिट्ठंति। ते अ तहा मंडलाणि अ इत्थ न भणिआणि गंथवित्थरभएणं ति गुरुमुहाओ नायव्वाणि ।

एअं अंबियदेवीकप्पं अविअप्पचित्तविरीणं ।
पायंतसुणंताणं पुज्जंति समीहिआ अत्था ॥ १ ॥

इति श्रीअंबिकादेवीकल्पः।

## APPENDIX VII.

### श्रीगिरिनारकल्पः ।



वरधर्मकीर्तिविद्यानन्दमयो यत्र विनतदेवेन्द्रः ।
स्वस्तिश्रीनेमिरसौ गिरिनारगिरीश्वरो जयति ॥ १ ॥
नेमिजिनो यदुराजीमतीत्य राजीमतीत्यजनतो यम् ।
शिश्राय शिवायासौ गिरि० ॥ २ ॥
स्वामी छत्रशिलान्ते प्रव्रज्य यदुचशिरसि चक्राणः ।
प्रव्रावलोकनमसौ गिरि० ॥ ३ ॥
यत्र सहस्राम्रवणे केवलमाप्यादिशद्विसुर्धर्मम् ।
लक्षारामे सोऽयं गिरि० ॥ ४ ॥
निर्वृतिनितम्बिनीवरनितम्बसुखमाप यन्नितम्बस्थः ।
श्रीयदुकुलतिलकोऽयं गिरि० ॥ ५ ॥
बुद्ध्वा कल्याणत्रयमिह कृष्णो रूप्यरुक्ममणिबिम्बम् ।
चैत्यत्रयमकृताऽयं गिरि० ॥ ६ ॥
पविना हरिर्यदन्तर्विधाय विवरं व्यधाद्रजतचैत्यम् ।
काञ्चनवलानकमयं गिरि० ॥ ७ ॥
तन्मध्ये रत्नमयीं प्रमाणवर्णान्वितां चकार हरिः ।
श्रीनेमेर्मूर्त्तिमसौ गिरि० ॥ ८ ॥
स्वकृतैतद्बिम्बयुतं हरिस्त्रिबिम्बं सुराः समवसरणे ।
न्यदधन्त यदन्तरसौ गिरि० ॥ ९ ॥
शिखरोपरि यत्राम्बाऽवलोकनशिरसि रङ्गमण्डपके ।
शाम्बो वलानकेऽसौ गिरि० ॥ १० ॥
यत्र प्रद्युम्नपुरः सिद्धिविनायकसुरः प्रतीहारः ।
चिन्तितसिद्धिकरोऽसौ गिरि० ॥ ११ ॥
तत्प्रतिरूपं चैत्यं पूर्वाभिमुखं तु निर्वृतिस्थाने ।
यत्र हरिश्चक्रेऽसौ गिरि० ॥ १२ ॥
तीर्थेतिस्मरणाद्यत्र यादवाः सप्त कालमेघाद्याः ।
क्षेत्रपतामापुरसौ गिरि० ॥ १३ ॥

विभ्रुमर्चति मेघरवो बलानकं गिरिविदारणश्चके ।
यत्र चतुर्द्वारमसौ गिरि० ॥ १४ ॥
यत्र सहस्राम्रवणांतरस्ति रम्या सुवर्णचैत्यानाम् ।
चतुरधिकविंशतिरयं गिरि० ॥ १५ ॥
द्वासप्ततिर्जिनानां लक्षारामेऽस्ति यत्र तु गुहायाम् ।
सचतुर्विंशतिकासौ गिरि० ॥ १६ ॥
वर्षसहस्रद्वितयं प्रावर्त्तत यत्र किल शिवासूनोः ।
लेप्यमयी प्रतिमासौ गिरि० ॥ १७ ॥
लेपगमेऽम्बादेशात्प्रभुचैत्यं यत्र पश्चिमाभिमुखम् ।
रत्नोऽस्थापयतासौ गिरि० ॥ १८ ॥
काञ्चनवलानकान्तः समवसृतेस्तन्तुनेह बिम्बमिदम् ।
रत्नेनानीतमसौ गिरि० ॥ १९ ॥
बौद्धनिपिद्धः सङ्घो नेमिनतौ यत्र मन्त्रगगनगतिम् ।
जयचन्द्रमादिशदसौ गिरि० ॥ २० ॥
तारां विजित्य बौद्धान्विहत्य देवानवन्दयत्संघम् ।
जयचन्द्रो यत्रायं गिरि० ॥ २१ ॥
नृपपुरतः क्षपणेभ्यः कुमार्युदितगाथयाम्बयार्प्यत यः ।
श्रीसङ्घाय सदायं गिरि० ॥ २२ ॥
नित्यानुष्ठानान्तस्ततोऽनुसमयं समस्तसङ्घेन ।
यः पठ्यतेऽनिशमसौ गिरि० ॥ २३ ॥
दीक्षाज्ञानध्यानव्याख्यानशिवावलोकनस्थाने ।
प्रभुचैत्यपावितोऽसौ गिरि० ॥ २४ ॥
राजीमतीचन्द्रदरीगजेन्द्रपदकुण्डनागझर्यादौ ।
यः प्रभुमूर्त्तियुतोऽयं गिरि० ॥ २५ ॥
छत्राक्षरघण्टाञ्जनविन्दुशिवशिलादि यत्रहार्यस्ति ।
कल्याणकारणमयं गिरि० ॥ २६ ॥
याकुड्यमात्यसज्जनदण्डेशाद्या अपि व्यधुर्यत्र ।
नेमिभवनोद्धृतिमसौ गिरि० ॥ २७ ॥
कल्याणत्रयचैत्यं तेजःपालो न्यवीविशन्मन्त्री ।
यन्मेखलागतमसौ गिरि० ॥ २८ ॥

शत्रुञ्जयसम्मेताष्टापदतीर्थानि वस्तुपालस्तु ।
यत्र न्यवेशयदसौ गिरि० ॥ २९ ॥
यः षड्विंशतिविंशतिषोडशदशकद्वियोजनाऽस्त्रशतम् ।
अरषट्क उच्छ्रितोऽयं गिरि० ॥ ३० ॥
अद्यापि सावधाना विदधाना यत्र गीतनृत्यादि ।
देवाः श्रूयन्तेऽसौ गिरि० ॥ ३१ ॥
विद्याप्राभृतकोद्धृतपादलिप्तकृतोज्जयन्तकल्पादेः ।
इति वर्णितो मयाऽसौ गिरिनारगिरीश्वरो जयति ॥ ३२ ॥

इति श्रीधर्मघोषसूरिकृत श्रीगिरिनारकल्प ।

## APPENDIX VIII

Inscription of the reign of Alapkhan in the temple of Sthambhana Pârsvanâtha at Cambay.

ॐ अर्हं संवत् १३६६ वर्षे प्रतापाक्रान्तभूतलश्रीअलावदीनसुरत्राणप्रतिशरीरश्रीअलपखानविजयराज्ये श्रीस्तंभतीर्थे श्रीसुधर्मास्वामिसंताननभोनभोमणिसुविहितचूडामणिप्रभुश्रीजिनेश्वरसूरिपट्टालंकारप्रभुश्रीजिनप्रबोधसूरिशिष्यचूडामणियुगप्रधानप्रभुश्रीजिनचंद्रसूरिसुगुरूपदेशेन ऊकेशवंशीयसाहजिनदेवसाहसहदेवकुलमंडनस्य श्रीजेसलमेरौ श्रीपार्श्वनाथविधिचैत्यकारितश्रीसम्मेतशिखरप्रासादस्य साहकेसवस्य पुत्ररत्नेन श्रीस्तंभतीर्थे निर्मापितसकलस्वपक्षपरपक्षचमत्कारिनानाविधमार्गणलोकदारिद्र्यमुद्रापहारिगुणरत्नाकरस्य गुरुगुरुतरपुरप्रवेशकमहोत्सवेन संपादितश्रीशत्रुंजयोज्जयंतमहातीर्थयात्रासमुपार्जितपुण्यप्राग्भारेण श्रीपत्तनसंस्थापितकोद्दडिकालंकारश्रीशांतिनाथविधिचैत्यालयश्रीश्रावकपौषधशालाकारापणोपचितप्रसृमरयशःसंभारेण भ्रातृसाहराजुदेवसाहबोलियसाहजेहडसाहलपपतिसाहगुणधरपुत्ररत्नसाहजयसिंहसाहजगधरसाहसलपणसाहरत्नसिंहप्रमुखपरिवारसारेण श्रीजिनशासनप्रभावकेण सकलसाधर्मिकवत्सलेन साहजेसलसुश्रावकेण कोद्दडिकास्थापनपूर्वं श्रीश्रावकपोषधशालासहितः सकलविधिलक्ष्मीविलासालयः श्रीअजितस्वामिदेवविधिचैत्यालयः कारित आचन्द्रार्कं यावन्नंदतात् ॥ शुभमस्तु । श्रीर्भूयात श्रमणसंघस्य । श्रीः ।

---

## APPENDIX IX

Inscriptions on the Satrunjaya Hill pertaining Samarâ's installation of the image of Âdiśvara.

संवत् १३७१ वर्षे माहसुदि सोमे श्रीमदूकेशवंशे वेसटगोत्रीयसा० सलषणपुत्रसा०आजडतनयसा०गोसलभार्यागुणमतीकुक्षिसंभवेन संघपति-आसाधरानुजेन सा०लूणसीहाग्रजेन संघपतिसाधुश्रीदेसलेन पुत्रसा०सहज-पालसा०साहणपालसा०सामंतसा०समरसा०सांगणप्रमुखकुटुम्बसमुदायोपेतेन निजकुलदेवी ( सचि ) कामूर्त्तिः करिता । यावद्व्योमनि चंद्राकौं यावन्मेरुर्म-हीतले । तावत् श्री ( सच ) का मूर्तिः····

संवत् १३७१ वर्षे माहसुदि १४ सोमे····ज्ञातीयराणकश्रीमहीपाल-देवमूर्त्तिः····संघपतिश्रीदेसलेन कारिता श्रीयुगादिदेवचैत्यालये ।

संवत् १३७१ वर्षे माहसुदि १४ सोमे श्रीमदूकेशवंशे वेसटगोत्रे सा० सलषणपुत्रसा०आजडतनयसा०गोसलभार्यासा०गुणमतिकुक्षिसम्भूतेन संघ-पतिसा०आशाधरानुजेन सा०लुणसीहाग्रजेन संघपतिसाधुश्रीदेसलेन सा०-सहजपालसा०साहणपालसा०सामंतसा०समरसीहसा०सांगणसा०सोमप्रभृ-तिकुटुंबसहायोपेतेन वृद्धभ्रातृसंघपतिआसाधरमूर्त्तिः श्रेष्ठिमाढलपुत्रीसं-घ०रत्नश्रीमूर्त्तिसमन्विता कारिता । आशाधरः कल्पतरुव्रहीयमाशात्रिकं पूरित········ । ····लंकृतबाहुयुगो युगादिदेवं प्रयतः प्रणौति ॥ चिरं नंदतात् ॥ ॥ शुभं भवतु ॥

संवत् १४१४ वर्षे वैशाषसु १० गुरौ संघपतिदेसलसुतसा०समरस-मरश्रीयुग्मं सा०सालिगसा०सज्जनसिंहाभ्यां कारितं । प्रतिष्ठितं श्रीकक्कसूरि-शिष्यैः श्रीदेवगुप्तसूरिभिः । शुभं भवतु ॥

**APPENDIX X**

## पेथडरासः

विणयवयणि वीनवउं देवि सामिणि वागेसरि
  हंसगमणि आकाशभमणि तिहूयणि परमेसरि ।
वीरजिणिंदह नमीय चलण चउविहुश्रीसंघिहिं
  कवडजक्ष जक्षाधिराज समरीय मनरंगिहिं ॥ १ ॥
कोडीघनघरनिवासिणी य वंदउं अंबिकदेवि ।
शासनदेवति मनि धरीय गुरुचलण नमेवि ॥ २ ॥
रास रमेवउ जिणभुवणि तालमेल ठवि पाउ ।
संघतलायन रोपीउ ए सभगिरि विभगिरि वेवि ॥ ३ ॥
निसुणउ धामी एकमनि महीयलिमज्झि पहाण ।
जास वोध निरवमतिलउ पेथ अगंजीयमाण ॥ ४ ॥
पिण एक तस गुण संभलउ संघपति साहसधीर ।
अकलीअ कलि जिम क्षेतरीअ गरूउ सुहिर गंभीर ॥ ५ ॥
पोरूआडकुलिमंडणउ वर्द्धमाणकुलिलीह ।
चांडसीहकुलि अवतरीया पेथपमुह सुतसीह ॥ ६ ॥
जिम कंचण कसवट्टीयए पामिउ बहुगुणरेह ।
बंधवि पेथपरीपीयइ बहूअ कालि घरि एह ॥ ७ ॥
वइसीय पेथड पाटे बंधव वोलावइ
  नरसीहरतनह कारे मनि मंत्र चलावइ ।
मणूयजन्म अतिदुलह अनइ श्रावयजम्म
  जीव लहइ बहुपुण्य जगि जिणवरधम्म ॥ ८ ॥
धणकणरयणभंडार ते सवि अछइ य असार ।
संचइ मोहनबंध ते सव्वि जाणे गमार ॥ ९ ॥
लाछितणउ जउ गरव करेई लीजइ राउल छल ह धरेई ।
मणूयजनम हवं सफल करीजइ जीवियपौवनलाहउ लीजइ ॥ १० ॥
अथिरलाछि किम थिर ह करीजइ जिणह धंम तस ऊपम दीजइ ।
सेत्रुजि रिसहसामि वंदीजइ विविहप्रकारिइं प्रभु पूजीजइ ॥ ११ ॥

मिलि वंधवि कीयउ वयण प्रमाण एकचित्ति सवि समाण जाण।
साते वंधवि कीयउ विचार सविहुं काजि लिउ नरसीअ भार ॥ १२ ॥
धम्मीय निसुणउ लोयमज्झि संघतणउ समाहउ भवीअणउ
आणूंअ दीजइ भत्तिजत्ति भवीया लहइ लाहउ धणकणउ।
पेलसि रूलीयइं रंगि रास हवं नवरस नवरंग नवीयपरे
सुणि सामहणी संघतणी जो करइं निरंतर घरेहिं घरे ॥ १३ ॥
जोइन देवालउं सामुहिउं तीहं माहि सुरेसर जिण ठवीय।
देसदेसाउर वरनयर तिहिं लेवि कंकोत्री पाठवीय ॥ १४ ॥
पाटणि पइसीय सामति तहिं कर्णनरेसर भेटीय वीनवीउ।
तीरथजात्र जीयवउं देव तहिं देसवटउ सपसाउ कीउ ॥ १५ ॥
तहिं वेगि लेउ पण आवीउ ए सयलसंघ तहिं हरसीय नीयमणि
नयर पसाइरउ कीधउ तक्खणि तहिं नाचइं कुतिगकुतिगीयां।
घरि घरि वहसीय लोय मनावीय साजणसाहसरिस संम्हावी गामागर-
पुरपाटणह ॥ १६ ॥
दूसमसमइ अहि जिम तिरीगु तारणतरंड रिसह मनि धरीय फल
लीजइ जनमहतणउं।
एकभावि नर जिणह धम्म परिरिहवरकलीय रमाउलीय ॥ १७ ॥
केवि कुतिग नर जोइं निरंतर भलां भलेरां अतिहिं वहिला रूपभवर।
कामिणि धामिणि धवल दियंती गायंती गुण जिणवरह।
अतिऊमाहु जात्र समाहउ करीयल कंनि सुणंतीहं य ॥ १८ ॥
ते चउरा रूडा तडयां ताडी नवांनवेरां दीसइं गेहणगण सयण।
ते घणाघणेरा समविसमेरा संखि न दीसइं असंखि पुण ॥ १९ ॥
देवालइ वालीय नयणि विसालीय दिंतीय ताली रंगि फिरंती हरिसभरे।
तहिं नाचइं खेला वहुयत वेला बाला भोला लउडा रसि रमइं ॥ २० ॥
अतिरंगिं पूरी दिंता भमरी नवपरि नवरंगइ तियसपरे।
परममहोच्छव कीउ देवालइ फागुणपंचमि वीतसीयालइ प्रस्थानं कीयं
पवरदिणि ॥ २१ ॥
संघपति सोहडदेउ वीनवीई तीरथजात्र जाइवउं गोसामीय।
सैलहुत सीपामणइ वहुय परघउ पणवि रहावीय।
वहथमह्ल लेउ पत्तनि आवीय संघ देवालइन रोपीउ ए ॥ २२ ॥

संघपूज तिहां कीधउं अवारी भोयण सयल लोय सवि पूरीय
महोच्छव कारवीय ॥ २३ ॥

लढण ॥ फागुणदसमि दिणंद चलीय संघ दहदिसितणउ ।
हसमस धसमस जोइ मिलीय लोक पण अतिघणउ ए ॥ २४ ॥
वहतमल्ल अगेवाण तुरीय ठाठ जोइं पाघरीय ।
पुलेहिं पलाण जोइ इकि देवालइ फिरीय ॥ २५ ॥
पहिलउं दीधी लागि जोइन देवालां संचरइं ए ।
अखंड पीयाणे जाइ पहिलउं पीलूयाणइ रहीय ॥ २६ ॥
चलीय संघसंजुत्त पहुतउ वेगि डाभलनयरे ।
तींहं दीन्हा वास भास रास रुलीयामणां ए ।
देवालइ ऊछाहु चैत्रप्रवाडि सोहामणी ए ॥ २७ ॥
वडराउत वपाणि करणराउ मनि सलहीइ ए ।
देद दयापरजाम वील्हणवंस वपाणीइ ए ॥ २८ ॥
पहुतउ देवालइ तोइ हरसीय संघ प्रसंसीइ ए ।
पेथडसमउ न कोइ मारगि मन तुम्हि वीहिसिउ ए ॥ २९ ॥
दीन्ह पीयाणउं तोइ मयगलपरि तुम्हि संचरीय ।
वेगि पहूता तोइ नयरमाहि ते तरवरीय ॥ ३० ॥
आंगणि दीन्हा वास देवालां पायलि फिरीय ।
भविया पणमउ पास जिणह भूयण रुलीयामणउं ।
कीधीय चैत्रप्रवाडि देवदेवांगणि पेषणउं ए ॥ ३१ ॥
संघह कीउं वत्सल्ल धम्मी नागलपुरतणे ए ।
चलीय पीयाणइ जाम मारगि माग न जाणीइ ए ॥ ३२ ॥
सहू यालइ गीयं ताम संघपति पेथ वपाणीइ ए ।
नयणि निहालइ लोक पुणधवंत धनवंत तहिं ॥ ३३ ॥
पूजीया जिणभूयणाइं भविया मणोरह चित्ति धरे ।
कीउं पीयाणउं भावि अवलीयछीतीयहारि तहिं ॥ ३४ ॥
पेथावाडइ जाइ भेटीय मंडणदेव तहिं ।
लाधउं मानप्रमाण सीकिरि आवइं गुणपवरो ॥ ३५ ॥
भयु मनि करिवउ तुम्हि मारगि जाउ तम्हि ।
गिया ते जंबू जाम संघह पार न पामीय ए ।

भेटीय झलु नाम पणवि पीयाणउं धामीयहं ॥ ३६ ॥
भडकूए आवास गोहिलसंडउ धरीय मनि ।
वहुगुणवंत सुजाण राण पहूतउ तेण खणि ॥ ३७ ॥
संघह दीन्ही धीर वलीय संघपति एकमनि ।
राणपुरे संपत्त संघ कनालइन रहइ ए ॥ ३८ ॥
चलीय सरीस उपराण वसहसंड संघपति भणइ ए ।
मइं मन मेल्हि निरास प्राण राणहं मन हरेसो ॥ ३९ ॥
वइठउ संघपतिपासि रंजीय ल्लीयायत हरिसे ।
गुणगरूउ सुवराउ लोलीयाणपुरसइं घणीय ॥ ४० ॥
धरउ धर्मनउ ठाउ भवीय भाविं तीणइ वह भणीय ।
दीन्ह पीयाणनीयाण उपरिं पीपलाइभणीय ।
चउरा दीन्ह विहाण डूंगरा देषीय मनि रूलीय ॥ ४१ ॥
दीठउ डूंगर दूरिथियां चडीय सरोवरपाले ।
संघपति दईं वधामणी हरिपीऊ ए हरिपीऊ ए हरिपीउ नयणि निहाले ॥४२॥
कुंकुमि च्छडउ दिवारीउ ए तहिं पाथरीया पाट ।
चाउलि चउक पूरावीउ ए सपरिपरे सपरिपरे सपरि पढइं वहुभट ॥ ४३ ॥
पढइं भाट संघपति निसुणि पेथड पुण्यपवित्त
चंडसीहघरि अवतरीउ गुरुदेवे गुरुदेवे गुरुदेवे सुय सत्त ।
धापीउ डूंगर पण तिलउ फूलपगर ते चंग
पाउलु नाचइं रंगभर गायंती ए गायंती ए गायंती मनह सरंग ॥ ४४ ॥
कापड कंचण दिन्ह तहिं वहुगुण पूरी आस ।
संघपति करइ वधामणउं चलीऊ ए चलीऊ ए चलीउ पालीयताणइ वास॥४५॥
गंगाजल जिम निर्मलउं ललतासर सुपवित्त ।
सीधषेत्र तीरथतिलउ तिससयरे तिससयरे तिससयरे संपत्त ॥ ४६ ॥
मरुदेवि सामिणि पय नमीय संतिनाह सुरराउ ।
पालित्तसूरिप्रतिष्ठिउ ए सोलम् ए सोलम् ए सोलमउ जिणराउ ॥ ४७ ॥
डूंगरसिरि जे पाहरीय कवडिजक्खपडिहारो ।
संघ जि सांनिध सो करइ पहिलं ए पहिलं ए पहिलं पास जुहारे ॥ ४८ ॥
अणुपम सर देषेवि तहिं पहूंता पालिदूयारि ।
सरगारोहण दिट्ठ तहिं अहिणव ए अहिणव ए अहिणव ईणं संसारे ॥ ४९ ॥

अष्टापद अवलोईई ए इंद्रमंडप अतिचंग ।
नंदीसर अहिणव तहिं देपीऊ ए देपीऊ ए देपीउ मनिहिं सुरंग ॥ ५० ॥
मंडपि पहुतउ पवित्र तहिं लोटींगणां करेउ ।
पणमीय सामीय रिसहजिण तिन्नि प्रदक्षिण तिन्निप्रदक्षिण तिन्नि प्रदक्षिण देउ ॥ ५१ ॥
दीठल्ला पदमहकमल निम्मल युगादि जिण पयठला सामी पढमजिण विमलगिरे ।
भवीयच्छुणंत सामी लागल्ला तम्ह थई नामिं नमो य नमो नमो सेत्रुजसिहरो५२
वायवद्धामणउं अतिहिं सोहामणुं रिसहभूअणि रलीआमणुं ए
भवीयजन कलस कंचणमय मंडियले ए दुध्व जलंजलि देयंति कुसुमंजले ॥
धुणंति दीणरीण जीण ऊतारंति जललवण नम्हण करंति सामी सुगंधजले ॥
कपूरिपूरि पूरीय तिणि कीय लि मृगनाभिमंडण त्रिजगगुरु
गुणनिलउ देवाधिदेव जोउ वेलवउ सेवत्रीपाडल वहल कुसुम परमल विपुल पूजहे । वायवद्धामणं ॥
भवीयमणि बहुआणंदि आरती ऊतारइ जिणिंद पढइं भट्ट मंगलिक रिसहसामि ।
तिलक भलउ लि कीय ले कंठि वरमाला ठविय ले चाउलि सिरि वद्धावीय लि । धन धामी वद्धामणउं ॥
भवीयजण रंजिय मनि दियंति ते दीण दुथीय जण मगण दाणु
नचंति नवनवी रमणि वीणवंसमृदंगमणि तिवल्लि तालनिनाद सुणि पूरीय भवण । वाइवद्धामणुं० ॥
आय कि रिसहेसर तम्ह परमेसर सामीसाल चिरकालि सुखिवर ।
तम्हची पाय ए कमलभमर भविक जन जयउ जगनाथ तुं जगतगुरो ॥ वायवद्धाम० ॥
अखंडकोडाकोडि सिद्धि ले तीथयर गोत्र बंधीय ले पूजीयु हरिसह मनि मन मिलीउ ।
आयस मगीय जव चलीय पूरीय संघ मल्लीय मनि निचंतीय पेथटकंठि टोडर ढलीउ । वायवद्धामणं० ॥
आयस मगिय पेथ ज चलीउ ढलीय टोडर संघपति मोकलावए
सयलसंघो पहुत पालीताणए घरि घरि साहमीवच्छल कारए ।

वावीय वित्त तिहि सयलसिद्धिक्षेत्रे जन्मफल लेउ जो बहुधणवंतइं रूपावटी चलीय पीयाणए ।
वडउ संघातिपति लोक वखाणए सेलटीया संघ पहुत तहि चलयउ अखंड पीआणए ।
जाइ अमरेलीयपीयाणए पहुतउ वेगि तहिं पण विकीयाणए विसमगिरि लं-घीयउ पूरि मनि आसह ॥
तेजलपुरि अंगणि दीन्हा वास उग्रसेनमंदिरु दीठ पगार अयनरकवि भणइं गढवि स्रइंगार ।
गरूअउ दीसए पोळिपगार नरपम नरसीअ नरआधार ॥
मंडलकि मंडिउ वास तहिं विसमए सुरठ वडदेस भोल लोक तहि निवसयए ।
गिरि गुरूउ गिरनार स पसिद्धउ ता लहि दमोदरो देव प्रसिद्धउ वहि सोवन-रेख नदी जलपूरीय ।
कालमेघो क्षेत्रपाल गिरिपाहरी मंत्रिवाहड देवि पाज करावीय धवलीय वर परव तीण करावीय ।
विसम डूंगर गुरूउ गिरनारो चडीय नेमिकुमरि लीयउ संजमभारो
दिनि चउपनि वरनाण ऊपजइए जगतिगुरु जिणिंद्र वर तसु सिहरे सिज्झए ॥
सीधु सामी सामलउ तसु सिहरि संघ पहुतउ ऊलट आंगिहिं अतिघणउ देपीउ
राजलकंत । तहि नाचिनए ए सहिलडी ए लला गीय गिरिनारे
राजलिवर कलिआमणउ सामलडउ संसारो । तहिं नाचिनए०॥
अंग पखालि सुगयंदमइ ए जल पहरीय धोति प्रवीत ।
इंद्रमहोत्सव आयरंभी तहिं वयठ लि बहुधणवंत । तहिं नाचिनए सहि० ॥
इंद्रमालउच्छाह करी जो वेचीय विभव नीयाणि ।
सफलमणोरह पूरीय संघपति चडीयलि इन्द्रविमानि ॥ तहिं नाचिनए० ॥
चमरधारि सरतारसवंगी गावंती बहु आसीस ।
सामलसामि किरि संघपति नंदउ वहत परीस ॥ तहिं नाचिनए० ॥
गयंदमइ ए नीरि कलस जलभरीय लि कपूरिहिं भंगी महापूज अहिमीम ।
नव कलीय लि आरती उत्तारउ मंगलिक संघपति ईम ॥ तहिं ना० ॥
अंचिकि आस मणोरह पूरी अवलोईय जगन्नाथ
सांबपजून उदारीय वलीयउ पेथ जन्म सुकीयाथ ॥ तहिं नासहलडी ए ल्ली-या गई गिरिनारि ॥

सोमनाथचंद्पह वंदीय देखीउ वलीउ जाम
दिउ पीयाणं हिव मन रहिसउ मंटलिक भणइ ईम ॥ तहिं ना० ॥
दिउ पीयाणं वेगि तहिं हरीयाला सूडा रे सरचाहे संपत्त मनीला सूडारे ॥

इति श्रीनागरादवंशमौक्तिकव्य० पेथडरासः समाप्तः ॥

---